॥ श्रीवेङ्कटेश्वर द्वादशमञ्जरिकास्तोत्रम् ॥

श्रीरस्तु ॥

श्री कल्याण गुणोल्लासं चिद्विलासं महौजसम् ।
शेषाद्रिमस्तकावासं श्रीनिवासं भजामहे ॥ १॥

वाराहवेष भूलोकं लक्ष्मीमोहन विग्रहम् ।
वेदान्त गोचरं देवं वेङ्कटेशं भजामहे ॥ २॥

साङ्गाना मर्चिताकारं प्रसन्न मुखपङ्कजम् ।
विश्वविश्वम्भराधीशं वृषाद्रीशं भजामहे ॥ ३॥

कनत्कनक वेलाढ्यं करुणा वरुणालयम् ।
श्री वासुदेव चिन्मूर्तिं शेषाद्रीशं भजामहे ॥ ४॥

घनाघनं शेषाद्रि शिखरानन्द मन्दिरम् ।
श्रिईतचातक संरक्षं सिंहाद्रीशं भजामहे ॥ ५॥

मङ्गळत्रं पद्माक्षं कस्तूरी तिलकोज्ज्वलम् ।
तुलस्यादि मनःपूज्यं तारागण विभूत्वमे ॥ ६॥

स्वामिपुष्करिणी तीर्थ वासं व्यासाभिः वर्णितम् ।
स्वाङ्घ्रीसूचित हस्ताब्जं सत्यरूपं भजामहे ॥ ७॥

श्रीमन्नारायणं श्रीशं ब्रह्माण्डा वसन तत्परम् ।
ब्रह्मण्यं सच्चिदानन्दं मोहातीतं भजामहे ॥ ८॥

अञ्जनाद्रीश्वरं लोकरञ्जनं मुनिरञ्जनम् ।
भक्तार्ति भञ्जनं भक्त पारिजातं तमाश्रये ॥ ९॥

भिल्ली मनोहर्यं सत्य मनन्तं जगतां विभुम् ।
नारायणाचलपतिं सत्यानन्दं तमाश्रये ॥ १०॥

चतुर्मुखत्र्यम्बकाढ्यं सन्नुतार्य कदम्बकम् ।
ब्रह्म प्रमुखनित्रानं प्रधान पुरुषाश्रये ॥ ११॥

श्रीमत्पद्मासनाग्रस्थ चिन्तितार्थ प्रदायिकम् ।

लोकैक नायकं श्रीमद् वेङ्कटाद्रीश माश्रये ॥ १२॥

वेङ्कटाद्रि हरेः स्तोत्रं द्वादश श्लोक संयुतम् ।
यःपठेः सततं भक्त्या तस्यमुक्तिः करे स्थिता ॥ १३॥

सर्वपापहरं प्राहुः वेङ्कटेशस्तदोच्यतेः ।
त्वन्नामको वेङ्कटाद्रिः स्मरतो वेङ्कटेश्वरः
सद्यः संस्मरणादेव मोक्ष साम्राज्य माप्नुयात् ॥ १४॥

वेङ्कटेश्वर पदद्वन्द्वं प्रजामिस्र स्मरणं सदा ।
भूयाश्शरण्योमे साक्षाद्देवेशो भक्तवत्सलः ॥ १५॥

॥ श्री वेङ्कटेश्वर द्वादश मञ्जरिका स्तोत्रं सम्पूर्णम् ॥